प्रोफेसर दिलीप चन्द्र नाथ
Prof. Dilip Chandra Nath



कुलपति
Vice-Chancellor

असम विश्वविद्यालय
(एक केन्द्रीय विश्वविद्यालय)
सिलचर 788011 असम, भारत
ASSAM UNIVERSITY
(A Central University)
Silchar 788011, Assam, India

## MESSAGE

It is great pleasure to learn that the Research Scholars of the Department of Sanskrit are going to publish 'Mitākṣarā', Vol. I, an Online Multilingual Research Journal of Sanskrit Studies. Publication of the online journal in the pandemic situation is praiseworthy. Hope that this journal will be an important addendum and will reflect the creative and intellectual minds of the scholars of the department and the University as a whole. I wish the publication a grand success and will bring literary, creative and cultural ethos among the students.

Date : 09.02.2021

9/2/21
Vice Chancellor

Phone : +91 3842 270801, 270273 (Office) Fax : + 91 3842 270802 (Office), Cell + 91 94350 73676, E-mail vc@aus.ac.in



**OFFICE OF THE HEAD**
**DEPARTMENT OF SANSKRIT**
**ASSAM UNIVERSITY, SILCHAR**
(A CENTRAL UNIVERSITY CONSTITUTED
UNDER ACT XIII OF 1989)

# शुभासंशा

असमविश्वविद्यालयस्य संस्कृतविभागस्य शोधच्छात्राणाम् अविरतप्रयासेन प्रकाशनीया बहुभाषिकी शोधपत्रिका **'मिताक्षरा'** । शोधपत्रिकेयं विभागीय-गवेषकाणामन्येषाञ्च शोधकार्यनिःसृतसार-प्रदर्शनेन विद्यार्थिनां समाजस्य राष्ट्रस्य च अभ्युदयसाधने सफला भविष्यतीति संस्कृतविभाग आशास्ते । अस्याः ज्ञानधारायाः अविरलप्रवाहः प्रवहतु नितरामिति विभागपक्षतः शुभासंशनम् ।

**दिनाङ्कः** 23-09-2020

शान्तिपोखरेल
संस्कृतविभागप्रधानः
असमविश्वविद्यालयः, शिलचरः।

## Editorial

It gives me immense pleasure to foresee that ***Mitākṣarā***, the Journal of the research scholars of the department of Sanskrit is going to be published. The research journal published the first issue under the name of ***Akṣarā***. For special reasons, it is renamed, ***Mitākṣarā*** by the editorial board. ***'Mitākṣarā'*** is **an Online Peer-Reviewed Multilingual Research Journal**.

The prime focus of the journal is to publish research papers of the budding scholars. This journal provides a platform intending to motivate scholars and academicians in Sanskrit research.

All the scholars of the department of Sanskrit have extended a helping hand to all the activities. I have received a lot of direct and indirect help from the editorial board, elsewhat, it would not have been possible to publish '***Mitākṣarā'***. Our departmental Professors have enriched the journal with their contributions. Research scholars have also improved the journal by highlighting various aspects of Sanskritic studies. I would like to express my gratitude to all the editorial board members for their support and encouragement.

The editor craves the indulgence of the learned scholars to this small endeavour and for the unintentional mistakes and others shortcomings.

**"गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥"**

Prof. Shanti Pokhrel
Chief Editor

**Volume – I, Issue - 1** ISSN – A/F
July-December, 2020
Available online on – https://sites.google.com/view/mitaksara

# CONTENTS

**Volume – I, Issue - 1** ISSN – A/F
July-December, 2020
Journal Homepage: https://sites.google.com/view/mitaksara

मिताक्षरा **Volume – I, Issue – 1, July-December 2020, pp. 31-33**
(संस्कृतविभागीया विज्ञ-वीक्षिता आन्तर्जालिकशोधपत्री)
**An Online Peer-Reviewed Multilingual Research Journal**
**Published by Department of Sanskrit, Assam University, Silchar**



# स्वामीदयानन्दस्य विवाहगृहस्थाश्रमविषयक - विचाराणां समाजे प्रभाव:

Susmita Purakayastha
Research Fellow, Department of Sanskrit
Assam University, Silchar, India.

***Abstract:***

*In this paper, I will try to discuss how Swami Dayananda, the proponent of Arya Samaj, has described in his various books on marriage and grhyasram has influenced on the society. He formed a strong movement against child marriage. According to him, grief is inevitable in a country, where child marriage takes place. Swami Dayananda has mentioned in his famous book Satyartha Prakash Swayamvar marriage which is very relevant according to some scholars. He advised to marry on the basis of deeds and virtues without supporting caste marriage. Both husband and wife are created by God, so if the husband can marry after the death of the wife, then the wife can also marry after the death of the husband, that is why, he has supported the widow marriage. He has always strived to educate women. According to him, like men, women are also entitled to administrative work.*

आर्यसमाजस्य प्रवक्तास्वामीदयानन्देन रचितेषु सर्वेषु ग्रन्थेषु विवाहगृहस्थाश्रमविषयमधिकृत्य बहवः विषयाः प्राप्यन्ते। तस्य संस्कारविधिग्रन्थे विवाहसंस्कारस्य विधिविधानानि गृहस्थस्य कर्त्तव्यानि च सविस्तरं वर्णितानि । सत्यार्थप्रकाशे चतुर्थः सम्पूर्णसमुल्लास एव गृहस्थविषयमधिकृत्य वर्त्तते। ऋग्वेदादिभाष्यभूमिकायामपि विवाहविषये प्रकरणमेकं प्राप्यते। महर्षिरचिते ऋग्वेदभाष्ये, यजुर्वेदभाष्ये चापि गृहास्थाश्रमविषये चर्च्चा चर्च्चिता । स्वामीदयानन्दस्य विवाहविषयकाः विचाराः प्रायेण गोभिलपारस्कराश्वलायनगृह्यसूत्राण्यनुसृत्य प्रतिपादिताः। अधुना स्वामिनो विवाहगृहस्थाश्रमविषयकविचाराणां समाजे क: प्रभाव इति आलोच्यते इह।

बालविवाहनिषेध:

स्वामीणादयानन्देन सत्यार्थप्रकाशे बालविवाहप्रथाया महती निन्दा कृता । वैदिकप्रमाणैः युवविवाहं संपोषयता विवाहयोग्यमायुषः कन्याया: षोडशवर्षतश्चतुर्विंशतिवर्षपर्यन्तं वरस्य च पञ्चविंशतिवर्षादष्टचत्वारिंशवर्षपर्यन्तं निर्धारितम् । "अष्टवर्षा भवेद् गौरी नववर्षा च रोहिणी। दशवर्षा भवेत् कन्या तत ऊर्ध्वं रजस्वला" इत्यादीनि वचनानि खण्डयित्वा युक्तियुक्तं

सप्रमाणं युवविवाहमतं प्रतिष्ठापयता तेन लिखितम् - यस्मिन् देशे ब्रह्मचर्यविद्याग्रहणादिरहिता बाल्यविवाहा अयोग्यविवाहाश्च भवन्ति स देशो दु:खाम्भसि निमज्जति।

महर्षेरुपयुक्तविचारस्य प्रभाव: समाजे द्रुतगत्याबिस्तारितः । मध्ययुगात् १८०० तम ईशवीयाब्दपर्यन्तं बालविवाहप्रथा प्राचुर्येण बभूव । तदानीमष्टवर्षीयाणां कन्यानां परिणयोऽजायत । बहुत्र पितरौ बालकबालिकयोर्जन्मन: प्रागेव तयोर्वाग्दानं चक्रतु:। परिणामस्तस्य भीषणोऽभवत् । बाल्ये विवाहकरणाद् निर्बलान्यपत्यान्यजायन्त, विधवावृद्धि:, सतीप्रथा इत्याद्या दुष्परिणामाः प्रादुर्भूताः । अपरिपक्वावस्थायां विवाहकरणस्य दोषान् निरीक्षमाणा: समाजसुधारका बालविवाहप्रथारोधे सचेतनतामूलकम् आन्दोलनं कृतवन्तः । समाजसुधारकाणामान्दोलनस्य प्रभावात् १८७० तम ईशवीयाब्दे भारतीयदण्डसंहितायां कन्याया विवाहयोग्यमायु: दशवर्षमितं सर्वकारेण स्वीकृतम् । परमिदमायुरपि विवाहस्यायोग्यमभवत् । १८९० तमे ईशवीयाब्दे एकादशवर्षीया "फुलमणि दास" इत्यभिधेया कन्या स्वपत्या सह सहवासकारणेन मृत्युमवाप । ततो विवाहयोग्यमायु: द्वादशवर्षदेशीयत्वं भवेदिति १८९१ तम ईशवीयाब्दे सर्वकारेण नूतननियमो निरमायि। इदमप्यायुर्विवाहार्थमल्पमासीत् । अतो विवाहार्थमायुसीमानिर्धारणाय समाजसुधारका विभिन्नतया प्रायतन्त । “सहवासायु:समितेनिर्माणं” (Age of consent committee), “बाल-विवाह-निषेधक-विधानस्वीकरणम्” (Child marriage Restraint act), इत्यादय: प्रतिषेधका उपाया अवलम्बिता:।
परिणामत: १९२९ तम ईशवीयाब्दे "शारदा-विधान" (Sharada act) पारितं, यदनुसारं बालकस्य विवाहयोग्यमायुर्न्यूनान्यूनमष्टादशवर्षत्वं बालिकायाश्च चतुर्दशवर्षत्वं केन्द्रीयविधानसभया नियमितम् । पुन: १९४९ तमे ईशवीयाब्दे कन्याया विवाहोग्यमायु: संशोध्य पञ्चदशवर्षत्वं कृतम्। १९७६ तम ईशवीयाब्दे च बालकस्य विवाहयोग्यमायुरेकविंशतिवर्षत्वं कन्यायाश्चाष्टदशवर्षत्वं निश्चितम् ।

क्रियात्मकरुपेणापि साम्प्रतं समाजे प्रायश: पूर्णयुवावस्थायामेव विवाहा: क्रियन्ते कार्यन्ते च ।

**स्वयंवरविवाह:**

स्वामीदयानन्देन वेदभाष्ये सत्यार्थप्रकाशे च स्वयंवरविवाहप्रणाली सर्वोत्तमत्वेन स्वीकृता । अस्या: प्रथाया व्यवहारो वर्त्तमानसमये बाहुल्येन दृश्यते । श्रीमत्या हाटेमहोदयाया: गवेषणानुसारं साम्प्रतं प्रतिशतं ७४ कन्या: स्वयंवरप्रणाल्या स्वविवाहं चिकीर्षन्ति । सम्बन्धिन: स्वसन्तानानां विवाहसम्बन्धनिश्चयकरणात् पूर्वं तेषां परस्परं दर्शनं गुणकर्मस्वभावपरीक्षणं स्वीकृतिं चानिवार्यत्वेन मन्यन्ते ।

**अन्तर्जातीयविवाह: (गुणकर्मस्वभावानुसारं विवाह:)**

स्वामीदयानन्दस्य मते गुणकर्मस्वभावानुसारमेव विवाह: श्रेष्ठो भवति । "शूद्रो ब्राह्मणतामेति ब्राह्गणश्चैति शूद्रताम् । क्षत्रियाज्जातमेवं तु विद्याद् वैश्यात्तथैव च" इति मनुस्मृतिप्रमाणपुरस्सरं तेन स्वमतप्रतिष्ठापितम् । तन्मते ब्राह्मणादिकुलोत्पन्नो नरोऽन्यकुलोत्पन्नां स्त्रियं गुणकर्मस्वभावानुसारं वोढुमर्हति । इयं साम्प्रतमन्तर्जातीयविवाहप्रथेति कथ्यते । अस्या: प्रचार: प्रसारश्च शनै: शनैर्भारतवर्षे वर्धते । सर्वकारोऽपि विशेषसुविधाप्रदानद्वारा प्रथामिमां प्रोत्साहयति ।

**विधवाविवाह:**

सत्यार्थप्रकाशस्य चतुर्थसमुल्लासे युगपद्बहुविवाहं निषेधयता स्वामिदयानन्देनाक्षतयोनिस्त्रिया अक्षतवीर्यपुरुषस्य च पुनर्विवाह: प्रतिपादित: । विधवाया: कुमारपुरुषेण, विधुरपुरुषस्य च कुमार्या सह विवाहं प्रतिषेधयता तेन विधवाविधुरयो: परस्परनियोगविधित्रस्त । नियोगप्रथायां विधवया सह विधुरपुरुषस्य सन्तानोत्पत्त्यर्थमेव सहवासो भवति, न तयोराजीवनं दाम्पत्यं च सम्पद्यते । सत्यार्थप्रकाशे यद्यपि विधवाविवाहप्रथा द्विजेभ्य: कर्त्तव्यरुपेण नैवोल्लिखिता तथापि स्वामीदयानन्द: पूनाप्रवचने इत्थमगादीत् - ' विधवाविवाहं ये खण्डयन्ति तेषां समर्थनं नाहं चिकीर्षामि । परमिदमवश्यं कथयामि यद ईश्वरसृष्टौ स्त्रीपुरुषौ समौ स्त: । पुरुषेभ्य: पुनर्विवाहस्याज्ञा दीयते चेत्, स्त्रिय: पुनर्विवाहार्थं कुतो निवार्यन्ते: ? ' इति ।

आर्यसमाजेन देशकालपरिस्थितिपरम्परानुसारं नियोगप्रथास्थाने विधवाविवाहविषये विशेषेण प्रयत्नो विहित: । परिणामत: साम्प्रतं भारतवर्षे विधवाविधुरयोर्विवाहा बहुत्र भवन्ति।

**स्त्रीशिक्षाप्रचलनम्**

स्वामीदयानन्देन गृहाक्स्थाक्षमस्योन्नतये स्त्रीशिक्षाया अनिवार्यत्वमपि स्वप्रणीतग्रन्थेषु प्रतिपादितम् । "स्त्रीशूद्रौ नाधीयाताम्", इत्यादीनि वेदविरुद्धवचनानि प्रत्याख्याय "यथेमां वाचं कल्याणीम्." "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्". "इमं मन्त्रं पत्नी पठेत्" इत्यादि श्रुतिस्मृत्यादिप्रमाणपुरःसरं महर्षिणा स्त्रीशिक्षाया आवश्यकता स्पष्टतया वर्णिता । स्त्रीशिक्षाप्रसारायार्यसमाजो महदान्दोलनमकार्षीत् । तत्प्रभावेण १८८३ तमे ईशवीयाब्दे वर्त्तमानभारतस्यैका नारी विश्वविद्यालयस्य प्रथमा स्नातिका बभूव । साम्प्रतं नारीशिक्षा सर्वत्र प्रचलिता। विद्यालयेषु महाविद्यालयेषु च कन्याभिरपि विद्या अधीयते। स्वामिन: शिक्षामनुसृत्य कन्यानां गुरुकुलान्यपि भारतवर्षे यत्र तत्रार्यसमाजेन प्रस्थापितानि यानि कन्याशिक्षाविषये बहुलमुपकुर्वन्ति ।

**स्त्रीणां प्रशासनाधिकार:**

स्त्री पुरुषवत् प्रशासनकर्मणोऽप्यधिकारिणी वर्त्तत इति स्वामीदयानन्दस्य मतम्। अस्य विचारस्य प्रभावेण प्रशासनक्षेत्रे स्त्रीणां यद्गौरवपूर्णं स्थानं साम्प्रतं विद्यते तन्न कस्यापि तिरोहितम्। सर्वा वयस्कस्त्रिय: प्रशासनाधिकारिणां निर्वाचने प्रत्याशिन्यो मतदानाधिकारिण्यश्च विध्यन्त इति प्रत्यक्षम् । कार्यमेतत् श्रीमतीसरोजिनीनायडूमहाभागाया: प्रयत्नेन सिद्धम् । सर्वप्रथमं तस्या अध्यक्षतायां स्त्रीणां शिष्टमण्डलेनैकेन १९१७ तमे ईशवीयाब्दे ब्रिटिशलोकसभाया: सम्मुखमेतद्विषयकं याचनापत्रं समुपस्थापितम्। १९१९ तमे ईशवीयाब्दे ब्रिटिशलोकसभया स्त्रीणां मतदानाधिकारविषय: प्रान्तीयव्यवस्थापिकापरिषदभ्य: समर्पित:। १९२६ तमे ईशवीयाब्दे च स्त्रिय: सर्वप्रथमं मद्रासप्रदेशे निर्वाचिका अभवन् । अन्ते च सर्वत्र भारतदेशस्यान्यप्रदेशेष्वपि स्त्रीभिर्मतदानाधिकारोऽलभ्यत । स्वतन्त्रभारते तु नार्यो विशिष्टं सम्मान्या अभूवन् । श्रीमतीसरोजिनीनायडू: भारते सर्वप्रथमा महिला राज्यपालिका (गवर्नर) बभूव, श्रीमतीविजयलक्ष्मी पण्डिता १९४७-४९ ईशवीयाब्दे मास्कोनगर्यां १९४९-५२ ईशवीयाब्दे च वाशिंगटननगर्यां प्रथमा भारतीया राजदूती अभूत् । अन्या अपि महिला: साम्प्रतं नगरपालिका-न्यायपालिका-विधानसभा-संसदादिषु प्रतिष्ठितं पदं भजन्ते । श्रीमती इन्दिरा गान्धी बहुवर्षं यावद् भारतस्य प्रधानमन्त्रित्वमलञ्चकार ।

इत्थमनेन संक्षिप्तविवेचनेन स्पष्टं यद् गृहस्थाश्रमविषये महर्षिदयानन्दस्य विचारैः समाजे राष्ट्रे च पर्याप्तं पदं लब्धम्, तच्च तत्कृते गौरवास्पदमेव।

**सन्दर्भग्रन्थसूची-**

१. सत्यार्थप्रकाशः, महर्षि दयानन्द सरस्वती, आर्ष् साहित्य प्रचार ट्रस्ट, दिल्ली, ६९ संस्करण, २००८

२. Sreenivas, Mytheli; Wives, Widows, and Concubines: The Conjugal Family Ideal in Colonial India, Indiana University Press, United States, २००८

३. वर्मा शास्त्रि, रामचन्द्र; मनुस्मृति, प्रभात् प्रकाशन, निउ दिल्ली, २०१८

४. The Rigveda: with Maharishi Dayananda Saraswati's commentary, Acharya Dharma Deva Vidya Martanda, Sarvadeshik Arya Pratinidhi Sabha, New Delhi,1974

५. ऋग्वेदादि भाष्य भूमिका, स्वामि दयानन्द सरस्वति, आर्य समाज प्रचार ट्रस्ट, दिल्ली, १९९३

*******